॥ श्रीगणेशस्तोत्रम् ॥

महागणपतिस्तोत्रम्

ॐकारमाद्यं प्रवदन्ति सन्तो वाचः श्रुतिनामपि ये गृणन्ति ।
गजाननं देवगणानतांघ्रिं भजेऽहमर्द्धेन्दुकृतावतंसम् ॥ १॥

पादारविन्दार्चनतत्पराणां संसारदावानलभङ्गदक्षम् ।
निरन्तरं निर्गतदानतोयैस्तं नौमि विघ्नेश्वरमम्बुजाभम् ॥ २॥

कृताङ्गरागं नवकुंकुमेन, मत्तालिमालां मदपङ्कलग्नाम् ।
निवारयन्तं निजकर्णतालैः, को विस्मरेत् पुत्रमनङ्गशत्रोः ॥ ३॥

शम्भोर्जटाजूटनिवासिगङ्गाजलं समानीय कराम्बुजेन ।
लीलाभिराराच्छिवमर्चयन्तं, गजाननं भक्तियुता भजन्ति ॥ ४॥

कुमारभुक्तौ पुनरात्महेतोः, पयोधरौ पर्वतराजपुत्र्याः ।
प्रक्षालयन्तं करशीकरेण, मौग्ध्येन तं नागमुखं भजामि ॥ ५॥

त्वया समुद्धृत्य गजास्यहस्तं, शीकराः पुष्कररन्ध्रमुक्ताः ।
व्योमाङ्गने ते विचरन्ति ताराः, कालात्मना मौक्तिकतुल्यभासः ॥ ६॥

क्रीडारते वारिनिधौ गजास्ये, वेलामतिक्रामति वारिपूरे ।
कल्पावसानं परिचिन्त्य देवाः, कैलासनाथं श्रुतिभिः स्तुवन्ति ॥ ७॥

नागानने नागकृतोत्तरीये, क्रीडारते देवकुमारसङ्घैः ।
त्वयि क्षणं कालगतिं विहाय, तौ प्रापतुः कन्दुकतामिनेन्दु ॥ ८॥

मदोल्लसत्पञ्चमुखैरजस्रमध्यापयन्तं सकलागमार्थान् ।
देवान् ऋषीन् भक्तजनैकमित्रं, हेरम्बमर्कारुणमाश्रयामि ॥ ९॥

पादाम्बुजाभ्यामतिकोमलाभ्यां, कृतार्थयन्तं कृपया धरित्रीम् ।
अकारणं कारणमाप्तवाचां, तन्नागवक्त्रं न जहाति चेतः ॥ १०॥

येनार्पितं सत्यवतीसुताय, पुराणमालिख्य विषाणकोट्या ।
तं चन्द्रमौलेस्तनयं तपोभिराराध्यमानन्दघनं भजामि ॥ ११॥

पदं श्रुतीनामपदं स्तुतीनां, लीलावतारं परमात्ममूर्तेः ।
नागात्मको वा पुरुषात्मको वेत्यभेद्यमाद्यं भज विघ्नराजम् ॥ १२॥

पाशांकुशौ भग्नरदं त्वभीष्टं, करैर्दधानं कररन्ध्रमुक्तैः ।
मुक्ताफलाभैः पृथुशीकरौघैः, सिञ्चन्तमङ्गं शिवयोर्भजामि ॥ १३॥

अनेकमेकं गजमेकदन्तं, चैतन्यरूपं जगदादिबीजम् ।
ब्रह्मेति यं ब्रह्मविदो वदन्ति, तं शम्भुसूनुं सततं भजामि ॥ १४॥

अङ्के स्थिताया निजवल्लभाया, मुखाम्बुजालोकनलोलनेत्रम् ।
स्मेराननाब्जं मदवैभवेन, रुद्धं भजे विश्वविमोहनं तम् ॥ १५॥

ये पूर्वमाराध्य गजानन! त्वां, सर्वाणि शास्त्राणि पठन्ति तेषाम् ।
त्वत्तो न चान्यत् प्रतिपाद्यमस्ति, तदस्ति चेत् सत्यमसत्यकल्पम् ॥ १६॥

हिरण्यवर्णं जगदीशितारं, कविं पुराणं रविमण्डलस्थम् ।
गजाननं यं प्रवदन्ति सन्तस्तत् कालयोगैस्तमहं प्रपद्ये ॥ १७॥

वेदान्त गीतं पुरुषं भजेऽहमात्मानमानन्दघनं हृदिस्थम् ।
गजाननं यन्महसा जनानां, विघ्नान्धकारो विलयं प्रयाति ॥ १८॥

शम्भोः समालोक्य जटाकलापे, शशाङ्कखण्डं निजपुष्करेण ।
स्वभग्नदन्तं प्रविचिन्त्य मौग्ध्यादाकर्ष्टुकामः श्रियमातनोतु ॥ १९॥

विघ्नार्गलानां विनिपातनार्थं, यं नारिकेलैः कदलीफलाद्यैः ।
प्रभावयन्तो मदवारणास्यं, प्रभुं सदाऽभीष्टमहं भजे तम् ॥ २०॥

॥ फलश्रुति ॥

यज्ञैरनेकैर्बहुभिस्तपोभिराराध्यमाद्यं गजराजवक्त्रम् ।
स्तुत्याऽनया ये विधिना स्तुवन्ति, ते सर्वलक्ष्मीनिधयो भवन्ति ॥ १॥

॥ इति श्रीगणेशस्तोत्रं सम्पूर्णम् ॥

॥ श्रीगणेशस्तोत्रं प्रह्लादकृतम् ॥

श्री गणेशाय नमः ।
अधुना शृणु देवस्य साधनं योगदं परम् ।
साधयित्वा स्वयं योगी भविष्यसि न संशयः ॥ १॥

स्वानन्दः स्वविहारेण संयुक्तश्च विशेषतः ।
सर्वसंयोगकारित्वाद् गणेशो मायया युतः ॥ २॥

विहारेण विहीनश्चाऽयोगो निर्मायिकः स्मृतः ।
संयोगाभेद हीनत्वाद् भवहा गणनायकः ॥ ३॥

संयोगाऽयोगयोर्योगः पूर्णयोगस्त्वयोगिनः ।
प्रह्लाद गणनाथस्तु पूर्णो ब्रह्ममयः परः ॥ ४॥

योगेन तं गणाधीशं प्राप्नुवन्तश्च दैत्यप ।
बुद्धिः सा पञ्चधा जाता चित्तरूपा स्वभावतः ॥ ५॥

तस्य माया द्विधा प्रोक्ता प्राप्नुवन्तीह योगिनः ।
तं विद्धि पूर्णभावेन संयोगाऽयोगर्वजितः ॥ ६॥

क्षिप्तं मूढं च विक्षिप्तमेकाग्रं च निरोधकम् ।
पञ्चधा चित्तवृत्तिश्च सा माया गणपस्य वै ॥ ७॥

क्षिप्तं मूढं च चित्तं च यत्कर्मणि च विकर्मणि ।
संस्थितं तेन विश्वं वै चलति स्व-स्वभावतः ॥ ८॥

अकर्मणि च विक्षिप्तं चित्तं जानीहि मानद!।
तेन मोक्षमवाप्नोति शुक्लगत्या न संशयः ॥ ९॥

एकाग्रमष्टधा चित्तं तदेवैकात्मधारकम् ।
सम्प्रज्ञात समाधिस्थम् जानीहि साधुसत्तम ॥ १०॥

निरोधसंज्ञितं चित्तं निवृत्तिरूपधारकम् ।
असम्प्रज्ञातयोगस्थं जानीहि योगसेवया ॥ ११॥

सिद्धिर्नानाविधा प्रोक्ता भ्रान्तिदा तत्र सम्मता ।
माया सा गणनाथस्य त्यक्तव्या योगसेवया ॥ १२॥

पञ्चधा चित्तवृत्तिश्च बुद्धिरूपा प्रकीर्तिता ।
सिद्ध्यर्थं सर्वलोकाश्च भ्रमयुक्ता भवन्त्यतः ॥ १३॥

धर्मा-ऽर्थ-काम-मोक्षाणां सिद्धिर्भिन्ना प्रकीर्तिता ।
ब्रह्मभूतकरी सिद्धिस्त्यक्तव्या पंचधा सदा ॥ १४॥

मोहदा सिद्धिरत्यन्तमोहधारकतां गता ।
बुद्धिश्चैव स सर्वत्र ताभ्यां खेलति विघ्नपः ॥ १५॥

बुद्ध्या यद् बुद्ध्यते तत्र पश्चान् मोहः प्रवर्तते ।
अतो गणेशभक्त्या स मायया वर्जितो भवेत् ॥ १६॥

पञ्चधा चित्तवृत्तिश्च पञ्चधा सिद्धिमादरात् ।
त्यक्त्वा गणेशयोगेन गणेशं भज भावतः ॥ १७॥

ततः स गणराजस्य मन्त्रं तस्मै ददौ स्वयम् ।
गणानां त्वेति वेदोक्तं स विधिं मुनिसत्तम ॥ १८॥

तेन सम्पूजितो योगी प्रह्लादेन महात्मना ।
ययौ गृत्समदो दक्षः स्वर्गलोकं विहायसा ॥ १९॥

प्रह्लादश्च तथा साधुः साधयित्वा विशेषतः ।
योगं योगीन्द्रमुख्यं स शान्तिसद्धारकोऽभवत् ॥ २०॥

विरोचनाय राज्यं स ददौ पुत्राय दैत्यपः ।
गणेशभजने योगी स सक्तः सर्वदाऽभवत् ॥ २१॥

सगुणं विष्णु रूपं च निर्गुणं ब्रह्मवाचकम् ।
गणेशेन धृतं सर्वं कलांशेन न संशयः ॥ २२॥

एवं ज्ञात्वा महायोगी प्रह्लादोऽभेदमाश्रितः ।
हृदि चिन्तामणिम् ज्ञात्वाऽभजदनन्यभावनः ॥ २३॥

स्वल्पकालेन दैत्येन्द्रः शान्तियोगपरायणः ।
शान्तिं प्राप्तो गणेशेनैकभावोऽभवतत्परः ॥ २४॥

शापश्चैव गणेशेन प्रह्लादस्य निराकृतः ।

न पुनर्दुष्टसंगेन भ्रान्तोऽभून्मयि मानद! ॥ २५॥

एवं मदं परित्यज ह्येकदन्तसमाश्रयात् ।
असुरोऽपि महायोगी प्रह्लादः स बभूव ह ॥ २६॥

एतत् प्रह्लादमाहात्म्यं यः शृणोति नरोत्तमः ।
पठेद् वा तस्य सततं भवेदोप्सितदायकम् ॥ २७॥

॥ इति मुद्गलपुराणोक्तं प्रह्लादकृतं गणेशस्तोत्रं सम्पूर्णम् ॥

॥ श्रीविष्णुकृतं गणेशस्तोत्रम् ॥

नारायण उवाच ।
अथ विष्णुः सभामध्ये तं सम्पूज्य गणेश्वरम् ।
तुष्टाव परया भक्त्या सर्वविघ्नविनाशकम् ॥

ईश त्वां स्तोतुमिच्छामि ब्रह्मज्योतिः सनातनम् ।
नैव वर्णयितुं शक्तोऽस्म्यनुरूपमनीहकम् ॥ १॥

प्रवरं सर्वदेवानां सिद्धानां योगिनां गुरुम् ।
सर्वस्वरूपं सर्वेशं ज्ञानराशिस्वरूपिणम् ॥ २॥

अव्यक्तमक्षरं नित्यं सत्यमात्मस्वरूपिणम् ।
वायुतुल्यं च निर्लिप्तं चाक्षतं सर्वसाक्षिणम् ॥ ३॥ var वायुतुल्याति

संसारार्णवपारे च मायापोते सुदुर्लभे ।
कर्णधारस्वरूपं च भक्तानुग्रहकारकम् ॥ ४॥

वरं वरेण्यं वरदं वरदानामपीश्वरम् ।
सिद्धं सिद्धिस्वरूपं च सिद्धिदं सिद्धिसाधनम् ॥ ५॥

ध्यानातिरिक्तं ध्येयं च ध्यानासाध्यं च धार्मिकम् ।
धर्मस्वरूपं धर्मज्ञं धर्माधर्मफलप्रदम् ॥ ६॥

बीजं संसारवृक्षाणामङ्कुरं च तदाश्रयम् ।
स्त्रीपुंनपुंसकानां च रूपमेतदतीन्द्रियम् ॥ ७॥

सर्वाद्यमग्रपूज्यं च सर्वपूज्यं गुणार्णवम् ।
स्वेच्छया सगुणं ब्रह्म निर्गुणं स्वेच्छया पुनः ॥ ८॥

स्वयं प्रकृतिरूपं च प्राकृतं प्रकृतेः परम् ।
त्वां स्तोतुमक्षमोऽनन्तः सहस्रवदनैरपि ॥ ९॥ var वदनेन च

न क्षमः पञ्चवक्त्रश्च न क्षमश्चतुराननः ।
सरस्वती न शक्ता च न शक्तोऽहं तव स्तुतौ ।
न शक्ताश्च चतुर्वेदाः के वा ते वेदवादिनः ॥ १०॥

इत्येवं स्तवनं कृत्वा मुनीशसुरसंसदि । var सुरेशं सुरसंसदि

सुरेशश्च सुरैः सार्द्धं विरराम रमापतिः ॥ ११॥

इदं विष्णुकृतं स्तोत्रं गणेशस्य च यः पठेत् ।
सायं प्रातश्च मध्याह्ने भक्तियुक्तः समाहितः ॥ १२॥

तद्विघ्ननाशं कुरुते विघ्नेशः सततं मुने ।
वर्धते सर्वकल्याणं कल्याणजनकः सदा ॥ १३॥

यात्राकाले पठित्वा यो याति तद्भक्तिपूर्वकम् ।
तस्य सर्वाभीष्टसिद्धिर्भवत्येव न संशयः ॥ १४॥

तेन दृष्टं च दुःस्वप्नं सुस्वप्नमुपजायते ।
कदाऽपि न भवेत्तस्य ग्रहपीडा च दारुणा ॥ १५॥

भवेद्विनाशः शत्रूणां बन्धूनां चापिवर्धनम् । var  च विवर्धनम्
शश्वदिघ्नविनाशश्च शश्वत्सम्यग्विवर्धनम् ॥ १६॥

स्थिरा भवेद्गृहे लक्ष्मीः पुत्रपौत्रविवर्धनम् ।
सर्वैश्वर्यमिह प्राप्य ह्यन्ते विष्णुपदं लभेत् ॥ १७॥

फलं चापि च तीर्थानां यज्ञानां यद्भवेद्ध्रुवम् ।
महतां सर्वदानानां श्रीगणेशप्रसादतः ॥ १८॥

इति श्रीब्रह्मवैवर्ते महापुराणे तृतीये गणपतिखण्डे
श्रीविष्णुकृतं गणेशस्तोत्रं सम्पूर्णम् ॥

॥ श्रीगणेशस्तोत्र ॥

श्रीगणेशाय नमः । नारद उवाच ।
प्रणम्य शिरसा देवं गौरीपुत्रं विनायकम् ।
भक्तावासं स्मरेन्नित्यमायुःकामार्थसिद्धये ॥ १॥

प्रथमं वक्रतुण्डं च एकदन्तं द्वितीयकम् ।
तृतीयं कृष्णपिङ्गाक्षं गजवक्त्रं चतुर्थकम् ॥ २॥

लम्बोदरं पञ्चमं च षष्ठं विकटमेव च ।
सप्तमं विघ्नराजेन्द्रं धूम्रवर्णं तथाष्टमम् ॥ ३॥

नवमं भालचन्द्रं च दशमं तु विनायकम् ।
एकादशं गणपतिं द्वादशं तु गजाननम् ॥ ४॥

द्वादशैतानि नामानि त्रिसन्ध्यं यः पठेन्नरः ।
न च विघ्नभयं तस्य सर्वसिद्धिकरः प्रभुः ॥ ५॥

विद्यार्थी लभते विद्यां धनार्थी लभते धनम् ।
पुत्रार्थी लभते पुत्रान्मोक्षार्थी लभते गतिम् ॥ ६॥

जपेद्गणपतिस्तोत्रं षड्भिर्मासैः फलं लभेत् ।
संवत्सरेण सिद्धिं च लभते नात्र संशयः ॥ ७॥

अष्टभ्यो ब्राह्मणेभ्यश्च लिखित्वा यः समर्पयेत् ।
तस्य विद्या भवेत्सर्वा गणेशस्य प्रसादतः ॥ ८॥

॥ इति श्रीनारदपुराणे संकटनाशनं गणेशस्तोत्रं सम्पूर्णम् ॥

॥ भक्तमनोरथसिद्धिप्रदं गणेशस्तोत्रम् ॥

श्री गणेशाय नमः । स्कन्द उवाच ।
नमस्ते योगरूपाय सम्प्रज्ञातशरीरिणे ।
असम्प्रज्ञातमूर्ध्ने ते तयोर्योगमयाय च ॥ १॥

वामाङ्गभ्रान्तिरूपा ते सिद्धिः सर्वप्रदा प्रभो ।
भ्रान्तिधारकरूपा वै बुद्धिस्ते दक्षिणाङ्गके ॥ २॥

मायासिद्धिस्तथा देवो मायिको बुद्धिसंज्ञितः ।
तयोर्योगे गणेशान त्वं स्थितोऽसि नमोऽस्तु ते ॥ ३॥

जगद्रूपो गकारश्च णकारो ब्रह्मवाचकः ।
तयोर्योगे हि गणपो नाम तुभ्यं नमो नमः ॥ ४॥

चतुर्विधं जगत्सर्वं ब्रह्म तत्र तदात्मकम् ।
हस्ताश्चत्वार एवं ते चतुर्भुज नमोऽस्तु ते ॥ ५॥

स्वसंवेद्यं च यद्ब्रह्म तत्र खेलकरो भवान् ।
तेन स्वानन्दवासी त्वं स्वानन्दपतये नमः ॥ ६॥

द्वंद्वं चरसि भक्तानां तेषां हृदि समास्थितः ।
चौरवत्तेन तेऽभूद्वै मूषको वाहनं प्रभो ॥ ७॥

जगति ब्रह्मणि स्थित्वा भोगान्भुंक्षि स्वयोगगः ।
जगद्भिर्ब्रह्मभिस्तेन चेष्टितं ज्ञायते न च ॥ ८॥

चौरवद्भोगकर्ता त्वं तेन ते वाहनं परम् ।
मूषको मूषकारूढो हेरम्बाय नमो नमः ॥ ९॥

किं स्तौमि त्वां गणाधीश योगशान्तिधरं परम् ।
वेदादयो ययुः शान्तिमतो देवं नमाम्यहम् ॥ १०॥

इति स्तोत्रं समाकर्ण्य गणेशस्तमुवाच ह ।
वरं वृणु महाभाग दास्यामि दुर्लभं ह्यपि ॥ ११॥

त्वया कृतमिदं स्तोत्रं योगशान्तिप्रदं भवेत् ।
मयि भक्तिकरं स्कंद सर्वसिद्धिप्रदं तथा ॥ १२॥

यं यमिच्छसि तं तं वै दास्यामि स्तोत्रयंत्रितः ।
पठते शृण्वते नित्यं कार्तिकेय विशेषतः ॥ १३॥

इति श्रीमुद्गलपुराणन्तर्वर्ति गणेशस्तोत्रं समाप्तम् ।

॥ योगशान्तिज्ञानप्रदं गणेशस्तोत्रम् ॥

श्रीगणेशाय नमः ।
सनकाद्या ऊचुः ।
धन्योऽसि नृपशार्दूल बुद्धिस्ते परमाद्भुता ।
निर्वेदं राजभोगेभ्यः सम्प्राप्तः पृथुलश्रवाः ॥ १॥

योगशन्तिमयं पूर्णं गणेशं विद्धि भूमिप ।
तं भजस्व महाभक्त्या तया शान्तिं गमिष्यसि ॥ २॥

एकदा स्म वयं सर्वे सङ्गताः शङ्करालयम् ।
वटमूले समासीनं पश्यामो ध्यानसंस्थितम् ॥ ३॥

तम् प्रणम्य स्थिताः सर्वे वयं विनयसंस्थिताः ।
स्तोत्रैस्तं बोधयन्तश्च बुबोध वै शिवस्ततः ॥ ४॥

त्यक्त्वा ध्यानं गणेशाय नमो वदतमादरात् ।
श्रुत्वा भ्रान्ता वयं तस्मै पृच्छामः संशयान्विताः ॥ ५॥

कोऽसौ गणाधिपः स्वामिन्नमसि त्वं कथं प्रभो ।
शिवः सहजरूपस्त्वं स्वाधीनः सततं मतः ॥ ६॥

अस्माकं वचनं श्रुत्वा शिवो हर्पसमन्वितः ।
जगाद ज्ञानमाद्यं यद्गाणपत्यं स शान्तिदम् ॥ ७॥

श्रीशिव उवाच ।
ब्रह्म यत्कथ्यते वेदैः कथं तत्र प्रवर्तते ।
स्वाधीनं सहजं विप्रापराधीनं त्रिधाभवम् ॥ ८॥

कर्मयोगादिभेदेन वेदेषु वेदवादिभिः ।
नानाविधं वर्णितं यद् ब्रह्म तन्माययान्वितम् ॥ ९॥

कर्मणां सकलानां संयोगो ब्रह्मणि जायते ।
तेन कर्मात्मकं ब्रह्म तदज्ञानाधिकं मतम् ॥ १०॥

समूहात्मकशब्दश्च गण इत्यभिधीयते ।
बाह्यान्तराधिभेदेनासंयोगे समूहो मतः ॥ ११॥

अन्नप्राणादिकाः शब्दा ब्रह्मणो वाचका मताः ।
ते सर्वे गणरूपाश्च तेषां स्वामी गणेश्वर ॥ १२॥

संयोगाऽयोगकाद्या ये नाना योगा मता बुधैः ।
योगानां योगरूपोऽयं गणेशो नात्र संशयः ॥ १३॥

गणो योगात्मकः प्रोक्तस्तसमात्तस्य गणा वयम् ।
योगरूपं विशेषेण नमामो भक्तिसंयुताः ॥ १४॥

माया विघ्नात्मिका प्रोक्ता भ्रान्तिदा बिम्बभावतः ।
तां जयन्ति जना ईशा विघ्नराजस्य सेवया ॥ १५॥

भवन्ति ते ब्रह्मभूता योगीन्द्रा गाणपाः स्मृताः ।
अहं गणेशरूपो वै भिन्नं मायामयं मतम् ॥ १६॥

चित्तं पञ्चविधं प्रोक्तं सा बुद्धिर्विविधात्मिका ।
तत्रैश्वर्यं च यत्प्रोक्तं सिद्धिदः सा परमाद्भुता ॥ १७॥

तत्र यद् बिम्बभावेन गणेशः प्रतितिष्ठति ।
मायाभ्यां मोहितोऽत्यन्तं सर्वत्रासौ विराजते ॥ १८॥

बिम्बभावं परित्यजय गणेशस्यैव सेवया ।
पञ्चधा चित्तमुत्सृज्य स्वयं चिन्तामणिर्भवेत् ॥ १९॥

गणेशोऽहं यदा विप्रास्तदा कुत्र प्रवर्तते ।
संयोगो मे तथा योगः शान्तियोगं लभेत्ततः ॥ २०॥

न भिन्नोऽहं कदा तस्माद्गणेशान्नात्र संशयः ।
योगीन्द्रः शान्तियोगेन ब्रह्मभूतो भविष्यति ॥ २१॥

एतदेव मदीयं यद्गुह्यं ध्यानं प्रकीर्तितम् ।
अतो गणेशदासोऽहं तं नमामि सदा द्विजाः ॥ २२॥

एवमुक्त्वा महायोगी वीरराम स शङ्करः ।
उच्छिन्नसंशया जाताः सनकाद्या वयं नृप ॥ २३॥

विचरामो महीमेताम् स्वर्गेषु विवरेषु ।
योगमार्गेण योगीशा गाणपत्यस्वभावतः ॥ २४॥

गणेशदर्शने जाता लालसा वयमादरात् ।
तस्मिन्काले गणाधीशः कश्यपस्यात्मजोऽभवत् ॥ २५॥

काशीराजो महाभक्तो गाणपत्यपरायणः ।
तस्य गृहे गतो देवः स्वकीयाचार्यसाधनात् ॥ २६॥

दर्शनार्थं वयं तत्र गताः काश्यां महामते ।
दर्शयामो गणेशं स्म ब्रह्मचारिस्वरूपिणम् ॥ २७॥

तम् प्रणम्य वयं राजन् स्थिता भक्त्या समन्विताः ।
बालरूपधरं देवं स्तुमः स्म बालयूथगम् ॥ २८॥

सनकाद्या ऊचुः ।
नमो विनायकायैव कश्यपप्रियसूनवे ।
अदितेर्जठरोत्पन्न ब्रह्मचारिन्नमोऽस्तु ते ॥ २९॥

गणेशाय सदा मायाधाराय तद्विवर्जित ।
भक्त्यधीनाय वै तुभ्यं हेरम्बाय नमो नमः ॥ ३०॥

तद् ब्रह्म शाश्वतं देव ब्रह्मणां पतिरञ्जसा ।
योयायोगादिभेदेन क्रीडसे नात्र संशयः ॥ ३१॥

आदिमध्यान्तरूपस्त्वं प्रकृतिः पुरुषस्तथा ।
नादानन्दौ च सूक्षस्त्वं स्थूलरूपो भवान् प्रभो ॥ ३२॥

सुरासुरमयः साक्षान्नरनागस्वरूपधृक् ।
जलस्थलादिभेदेन शोभसे त्वं गजानन ॥ ३३॥

सर्वेभ्यो वर्जितस्त्वं वै मायाहीनः स्वरूपधृक् ।
मायामायिकरूपश्च को जानाति गतिं पराम् ॥ ३४॥

कथं स्तुमो गणाधीशं योगाकारमयं सदा ।
देवा न शंभुमुख्याश्च शक्ताः स्तोतुं कदाचन ॥ ३५॥

वयं धन्या वयं धन्या येन प्रत्यक्षतां गतः ।
अस्माकं योगिनां ढुण्ढे कुलदेवस्त्वमञ्जसा ॥ ३६॥

इत्युक्त्वा मौनमास्थाय ननाम दण्डवच्च तम् ।
उवाच नो गणाधीशो भक्तिभावनियन्त्रितः ॥ ३७॥

विनायक उवाच ।
भवद्भिर्यत्कृतं स्तोत्रं मदीयं योगशान्तिदम् ।
भविष्यति महाभागाः पठतः शृण्वतः सदा ॥ ३८॥

यं यमिच्छति तं तं वै दास्यामि स्तोत्रभावतः ।
भवन्तो गाणपत्याश्च भविष्यथ यथा शिवः ॥ ३९॥

एवमुक्त्वा स्वयं बालश्चिक्रीड प्राकृतो यथा ।
बालकैः सह योगात्मा काश्यपः पूर्ववन्नृपः ॥ ४०॥

वयं काशीपते राजन् दर्शनार्थं गतास्ततः ।
तेनापि मानिताः सम्यक् भुक्त्वा च स्वपदे पुनः ॥ ४१॥

एतत्ते कथितं सर्वं योगशान्तिमयं महत् ।
ज्ञानं पूर्णं गणेशाख्यं तं भजस्व गणाधिपं ॥ ४२॥

इति श्रीमुद्गलपुराणान्तर्गतं गणेशस्तोत्रं समाप्तम् ।